तिरिक्तहेतोरपन्हवतां गतैः प्रयोजनाभावाय यथा पूर्णब्रह्मात्मना स्थितस्तथैव तिष्ठति कदापि नक्षुभ्यत इत्यर्थः ॥ २८ ॥ २९ ॥ ब्रह्मव्यतिरिक्तं न किंचिदस्तीति यज्जानाति तत्सम्यग्ज्ञानं तदवबोधेन नित्यमेकमेवाद्वितीयमिति स्वजातीयविजातीयस्वगतभेदगतसमाधिना निष्प्रतियोगिकब्रह्ममात्रं यत्र संख्यायते तत्संख्यं तदेव सांख्यं परमाद्वैतशास्त्रं एतेनैव निर्विशेषब्रह्मस्वमात्रमित्येवबुद्धा ब्रह्मविद्वरीयांसस्तेसांख्याः योगिनोजीवन्मुक्ता स्मृता इत्यर्थः ॥ ३० ॥ ३१ ॥ भ्रूमध्ये तारकालोके शांतावंतमुपागते चैतनैकतने बद्धे प्राणस्पंदोनिरुध्यत इत्यादिश्रुतिसिद्धयुक्त्या प्राणाद्यनिलस्पंदसंशांतौ सत्यामथ ये संप्रज्ञातसमाधिसाधनादेहभयवैरल्यादनामयं निर्मायत्वादनाद्यनंतं पदमागतालक्ष्यैकतानचित्तास्युस्तेयोगयोगिनोजीवन्मुक्ताः स्मृताः इत्यर्थः ॥ ३२ ॥ ३३ ॥ यथा शैलेन्द्रं मेरुं मुखनिर्गतविश्वासोच्छ्वासा न चालयंति तथा शीतोष्णसुखदुःखादयोयं ब्रह्मात्मनिष्ठं साम्यात् समभावान्नोद्धरन्ति न चालयंति तस्याचितत्वेन तच्चित्तं मृतमितिविदुः सजीवन्मुक्त इत्यर्थः ॥३४॥३५॥

वाचामतीतविषयोविषयाशादशोज्झितः ॥३६॥
परानंदरसास्तुब्धो रमते स्वात्मनात्मनि ॥ ३७ ॥
निर्ग्रंथिः शांतसंदेहो जीवन्मुक्तो विभावनः ॥३८॥
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इवस्थितः ॥३९॥
निर्धनोपि सदा तुष्टोप्यसहायोमहाबलः ॥ ४० ॥
नित्यतृप्तोप्यभुंजानोप्यसमः समदर्शनः ॥ ४१ ॥
कुर्वन्नपि न कुर्वाणश्चाभोक्ता फलभोग्यपि ॥४२॥
शरीर्यप्यशरीरोसौ परिच्छिन्नोपि सर्वगः ॥४३॥
अध्यात्मरतिरासीनः पूर्णःपावनमानसः ॥ ४४ ॥

१ सजातीयविजातीयस्वगतभेदा गता रहिता यत्र सः । इत्यपिपाठः ।

(टीका) यतोवाचोनिवर्तन्त इतिश्रुत्यनुरोधेन वाक्यान
वृत्तीनामतीतब्रह्मैव विषयो यस्य स वाचामतीतविषयः विषयास
स्याचथात्वं कथमित्यत आह विषयेति ब्रह्ममात्रविषयाश्रितः पु
सांसारिकविषयाशादशा येनोज्झिता स तथोक्तः अस्खलितब्र
हष्टित्वात् विषयानंदवैमुख्यपूर्वकं परानंदरसास्वादनतोविषया
मत्यन्तुब्धचित्तोभवति सोयं विद्वान् आत्मानाऽखंडाकारवृत्तिमद
करणेन स्वात्मनि स्वे महिम्नि रमते रतिहेतुदाराद्यभावादिल
॥ ३६ ॥ ३७ ॥ ब्रह्मविष्णुरुद्रग्रंथयोव्यष्टिसमष्टिशपंचदश
ग्रंथयोवा यस्मान्निर्गताः सोऽयं निर्ग्रंथिः अहमहं वानवेति संदेह
स्य शांतः स शांतसंदेहः विगतस्वातिरिक्तभावनोविभावनः भाव
सामान्यभावे निर्माणं नाशमेतीत्यत्राह अनिर्वाण इति नाशबु
धिवैरल्यात् चित्रार्पितरूपोपि जीवन्मुक्तो भवतीत्यर्थः ॥ ३८ ॥
सांसारिकतुष्टिहेतुधनादिहीनोपि स्वात्मनित्तेपाप्त्या सदैव तु
स्वातिरिक्तसहायशून्योऽपि महाबलः योगिनः सहायशून्यत
लोकवद्भुंजानोऽपि ब्रह्मामृतरसास्वादान्नित्यतृप्तः स्वातिरि
चासमोपि सर्वत्र समदर्शनः नित्यादिकर्मकुर्वन्नपि अकर्ता
किंचिदप्यकुर्वाणश्च भवति परदृष्ट्या प्रारब्धकर्माभासफलभो
अयं स्वदृष्ट्या भोक्ता न भवति एष योगिलोकवत्परिच्छिन्नश
प्यऽशरीरि सर्वगतोभवति सदापरमद्वैताख्याध्यात्मशास्त्ररतिः
महिम्न्यासीनः सर्वत्र परिपूर्णः सदा ब्रह्माहमस्मीति पावनमान
जीवन्मुक्तोभवतीत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४

नैष्कर्म्येण नतस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ॥
न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥
जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ ४
न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति ॥ ४

अद्वयत्वं सदाह्लाद इति हि ब्रह्मवेदनम् ॥ ४९ ॥
ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैवतु ॥ ५० ॥
समाधिमथकर्माणि माकरोतु करोतु वा ॥ ५१ ॥
हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ ५२ ॥

(टीका) यस्य ब्रह्मनिष्ठस्य मनोनिर्वासनं भवति तस्य श्रुतिस्मृत्युक्तनित्यादिकर्मभिर्नार्थः प्रयोजनमस्ति कर्मसामान्यं यतोनिर्गतं तन्निष्कर्म तद्भावोनैष्कर्म्यं तेन नैष्कर्म्येण सन्यासेनापि नार्थोस्ति मनोनास्तीतिधिया तत्समाधानं तन्निग्रहः प्रणवादिजाप्यं च, ताभ्यां समाधानजाप्याभ्यामपि नहि प्रयोजनमस्ति जीवन्मुक्तस्य स्वातिरिक्तसर्वापन्हवसिद्धब्रह्ममात्रदृष्टित्वात् कर्मतत्सन्यासवारादिजपसमाधिभिः प्रयोजनाभावादित्यर्थः ॥ ४५ ॥ ४६ ॥ सर्वस्मात्परमात्मानं स्वमात्रतया वेत्तीति परमात्मवित् ब्रह्मविद्वरः प्रातिभासिकदृष्ट्या स्वातिरिक्तप्रपंचजातं जगज्जीवेशादिरूपेण पश्यन्नपि नहि तत्तथा पश्यति किंतु जगज्जीवेशादिकलनाकलितं जगच्चिद्रूपब्रह्मातिरिक्तं न किंचिदस्तीति ब्रह्मवस्त्वेव पश्यति ब्रह्मातिरिक्तस्य मृग्यत्वादित्यर्थः ॥ ४७ ॥ ४८ ॥ स्वातिरिक्ततया यदविषमानं तदविद्यापदमन्नमुच्यते तस्यापि स्वानतिरिक्तत्वादहमन्नं अपन्होतव्यस्वातिरिक्ताभावाच्चाहंब्रह्मविद्वरीयान् सदाह्लादोभवामि इत्येव ब्रह्म वेद चिन्मयमिति ब्रह्मविद्वरीयान् सम्यग् ज्ञानात्सर्वं तु ब्रह्मात्मनैव ग्रसति एवं ग्रसित्वा स्वमात्रमेव शिष्यत इत्यर्थः ॥ ४९ ॥ ५० ॥ ब्रह्मविद्वरीयान् हृदयेनात्तसर्वेहःसन्यदृच्छया कदाचित्समाधिनाथवा श्रुतिस्मृत्युक्तकर्माणि करोतु कदापि माकरोतु वा सर्वथोत्तमाशयोमुनिः ब्रह्ममात्रभावारूढोजीवन्मुक्तोवा ब्रह्ममात्रावस्थानलक्षणाविदेहमुक्तोवा भवतीत्यर्थः ॥ ५१ ॥ ५२ ॥

अघरत्वाद्वरेण्यत्वाद्धूतसंसारबंधनात् ॥ ५३ ॥

तत्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ ५४ ॥
योविलंघ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान् ॥५५
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥५६॥

यथा रविः सर्वरसान् प्रभुङ्क्ते
हुताशनश्चापि हि सर्वभक्षः ॥ ५७ ॥
तथैव योगी विषयान् प्रभुङ्क्ते
न लिप्यते पुण्यपापैश्च शुद्धः ॥ ५८ ॥

( टीका ) ब्रह्ममात्रपदारूढोमुख्यावधूतोऽपि जीव इतिचे
अवधूतशब्दार्थप्रकाशकहेतुचतुष्टयसत्वादवधूतोब्रह्मविद्वरिष्ठस्तथा
आद्यवर्णार्थहेतुरक्षरत्वादिति क्षराक्षरप्रपंचापन्हवसिद्धपरमाक्षरत्वा
द्वितीयवर्णार्थहेतुर्वरेण्यत्वादिति ब्रह्मविद्वरिष्ठेस्वावशेषतया वरणी
रूपत्वात् तृतीयवर्णार्थहेतुर्धूतसंसारबंधनादिति स्वातिरिक्तहेतोर
न्हवचिकृतसंसारबंधनत्वात् चतुर्थवर्णार्थहेतुस्तत्वमस्यादिलक्ष्यत्वादि
समष्टिव्यष्टिप्रपंचारोपापवादाधारशिवजीवपरप्रत्यक्प्रविभक्तवाच
लक्ष्येहेयांशापन्हवमुखेन यत्स्वमात्रतया लक्ष्यते ज्ञायते त
तत्वमस्यादिलक्ष्यं तद्भावस्तस्मान्मुख्यावधूतः परमात्मा ब्रह्मवि
रिष्ठो न जीव इत्यर्थः स्वकल्पितानेकभिदा प्रपंचोनश्यो
परात्परं तत् ज्ञात्वा स्वमात्रं परमाद्वयं योमुख्यावधूतः सहि चि
स्वरूप इतिस्मृतेः ॥ ५३ ॥ ५४ ॥ परिव्राट् पदमारूढोविद्व
स्वातिरिक्तधिया विकल्पित वर्णब्रह्मचर्याद्याश्रमद्राविडगौडप्रविभ
नानाजातितद्धर्मानपि विलंघ्यातिक्रम्य यः पुमानात्मन्येव
महिम्नि सदास्थितो भवति सोतिवर्णाश्रमी वर्णाश्रमाचारात
तोयोगी गौणावधूतोजीवन्मुक्तो भवति स्वातिरिक्तवर्णाश्रमक
नापूर्वकं तदतीतोस्मीति भ्रमारूढत्वात् गौणत्वं युज्यत इत्य
॥५५॥५६॥ यथा रविः सूर्यः साध्यसाधुविषयगतसर्वरसान् भु

यथा हुताशनोऽग्निश्च स्वव्यतिरिक्तैंधनादिकं भक्षयतीति सर्वभक्षोभवति च शब्दाद्वायुः सर्वरसान् शोषयति यथा रव्यग्निवायवो न लिप्यन्ते तथैवायं योगी रव्यादिवद्विशुद्धः सन् स्वकरणग्रामग्राह्यविषयान् भुङ्क्ते स्वातिरिक्तविषयजातं नेति ग्रसित्वा तद्गतपुण्यपापैश्च न लिप्यते लेपालेपहेतुस्वातिरिक्तविषयैरभावादित्यर्थः ॥५७॥५८॥

केवलं सुसमः स्वच्छो मौनी मुदितमानसः ॥५९॥
संतोषामृतपानेन ये शांतास्तृप्तिमागताः ॥६०॥
आत्मारामा महात्मानस्ते महापदमागताः ॥६१॥
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ॥ ६२ ॥
न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते॥६३॥
अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः ॥६४॥
तिष्ठति ध्येयसंत्यागी स जीवन्मुक्त उच्यते ॥६५॥
मौनवान्निरहंभावो निर्मानो मुक्तमत्सरः ॥६६॥
यः करोति गतोद्वेगः स जीवन्मुक्त उच्यते ॥६७॥
यावता दृश्यकलना सकलेयं विलोक्यते ॥६८॥
सा येन सुष्ठुसंत्यक्ता स जीवन्मुक्त उच्यते ॥६९॥

( टीका ) निद्वरः स्वातिरिक्तप्रमुदितमानसः सदा संतुष्टचित्तोमौनी प्रत्यग्भावारूढतयातिस्वच्छहृदयः विशेषसामान्यविरलं केवलं ब्रह्मस्वमात्रमिति ज्ञात्वा सुसमः साम्यब्रह्मभावमापन्नोजीवन्मुक्तोभवतीत्यर्थः ये ब्रह्मविद्वराः स्वातिरिक्तप्रपंचशांताः संतः निर्विशेषं ब्रह्म स्वमात्रमित्यवगतिसंजातेन निर्विशेषब्रह्मानंदामृतपानेन नित्यतृप्तिमागता दारादिनैरपेक्ष्येणात्मन्येव रमन्त इति स्वात्मारामा भवन्ति ते महात्मानः निर्विक्षेपचित्ताभूत्वा महापदं महत्पदं ब्रह्म ब्रह्मविद्वरिष्ठत्वं वा गता भवन्तीर्थः ॥ ५९॥६० ॥ ॥ ६१ ॥ स्वेप्सितविषयलाभजोहर्षः विषयालाभजोऽमर्षः द्वैतजं

भयं कामापूरणासंजातः क्रोधः इदं मेस्यादित्यभिलापः स्वातिरि स्तित्वज्ञानी कृपणस्तद्भावः कार्पण्यं एवं हर्षादिकार्पण्यांत भिर्विधिवशात् मात्राभिः सविपर्ययाभिर्वा कदापि न हृष्य जीवन्मुक्त इत्युच्यते इत्यर्थः ॥ ६२ ॥ ६३ ॥ देहत्रयतदुप कौपीनाच्छादनभिक्षादावपि लीलयाहंकारममकारमयीं वासनां शेषतस्त्यक्त्वा स्वातिरिक्तध्यातृध्यानादित्रिपुटीत्यागी यस्ि सजीवन्मुक्त उच्यते ॥ ६४ ॥ ६५ ॥ प्रपंचासंभवज्ञानं तद्वान्निर्विशेषब्रह्मज्ञानी देहत्रयेऽपि निरहंभावः मानावमानवैरल मानः येन केन चोद्देशेन हृत्यर्पितदृढक्रोधोमत्सरोयस्मा समुक्तमत्सरः गतोद्वेगः संकल्पशून्यःसन् देहधारणमात्रोप भिक्षादिकर्म यः करोति सोऽयं मुनिर्जीवन्मुक्त उच्यते ॥ ६ ६७ ॥ स्वाज्ञतविकल्पितेयं स्वाविद्यापदतत्कार्यरूपिणी दृश्यकलना सत्यत्वेन व्यावहारिकत्वेन वा विलोक्यते सा सम्यग्ज्ञानिना सुष्ठु संत्यक्ता सम्यगपन्हवतो गता भवति स न्मुक्तोब्रह्मविद्वरिष्ठ उच्यत इत्यर्थः ॥ ६८ ॥६६॥

उद्वेगानंदरहितः समया स्वच्छया धिया ॥ ७
न शोचते न चोदेति स जीवन्मुक्त उच्यते ॥
सर्वेच्छाः सकलाः शंकाः सर्वेहाः सर्वनिश्चया
धिया येन परित्यक्ता स जीवन्मुक्त उच्यते ॥
जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ॥७४
सममेव मनोयस्य स जीवन्मुक्त उच्यते ॥ ७
सर्वाधिष्ठानचिन्मात्रं निर्विकल्पे चिदात्मनि ॥
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥
क्रियानाशाद्भवेच्चिंता नाशोस्माद्वासनाक्षयः ॥
वासनाप्रक्षयोमोक्षः स जीवन्मुक्त उच्यते ॥ ७

( टीका ) यो यं ब्रह्मविद्वरः स्वाभिलषितविषयालाभजः क्रोध उद्वेगः स्वाभिलषितविषयलाभज आनंदः स्वातिरिक्तं न किंचिदस्तीतिसमया स्वच्छया धिया क्रोधात्मकोद्वेगानंदवृत्तिविरलः सन् तल्लाभालाभतो न शोचते नचोदेति विषादं हर्षं वा न याति शोकहर्षहेतुः स्वान्तःकरणाभावात्सोऽयमचितोजीवन्मुक्तो-भवतीत्यर्थः ॥ ७० ॥ ७१ ॥ इदं मे स्यादिदं मे स्यादित्यंप्राप्त-वस्तुविषयकाः सर्वेच्छाः यावत्यः इदमिदं वा नवेति संशयविषयाः सकलाः शंकाः प्राप्तन्यवस्तुनि पुनर्भोगेच्छारूपाः सर्वेहः देह एवाहं जीवोऽहमीश्वरोऽहं ब्रह्माहमित्येवमाकाराः सर्वे निश्चया येन ब्रह्म-विद्वरीयसा ब्रह्माकारपरिणतया धिया ब्रह्मातिरिक्तं न किंचिद-स्तीति परित्यक्ता मिथ्यात्वेनालोकिता भवंति सजीवन्मुक्त उच्यत इत्यर्थः ॥ ७२ ॥ ७३ ॥ यस्य ब्रह्मविद्वरीयसः स्वपरयोरुदया-स्तमयाभ्यां सहितेषु सोदयास्तमयेषु जन्मस्थितिविनाशेषु च-शब्दात् कारणीभूतपुण्यपापेष्वपि भवितव्यं भवत्येवेति सर्वं ब्रह्मेति च मनः सममेव भवति समानमन्यत् ॥ ७४ ॥ ७५ ॥ अविद्वि-कल्पशतजुष्टसर्वप्रपंचारोपापवादाधिष्ठानचिन्मात्रे सर्वविकल्पग्रास-निर्विकल्पके चिदात्मनि स्वमात्रतया साक्षात्कृते सत्यथ सर्वत्रगत स्नेहः सन् यो जीवति सर्वेषु भूतेषु नश्यत्स्वपि सर्वात्मतयाऽवतिष्ठते समानमन्यत् ॥ ७६ ॥ ७७ ॥ फलेच्छया क्रियत इति क्रिया तत्फलेच्छाभावात् क्रियानाशोभवति स्वकर्त्तव्याभावतया क्रिया-नाशात्तत्फलचिंतापि नाशमेति अस्माचिंतानाशात्तद्धेतुवासनाक्षयो-भवति सर्वानर्थभूतवासनाप्रक्षयाधारोमोक्ष इति योजानाति स जीवन्मुक्त उच्यते ॥ ७८ ॥ ७९ ॥

निर्विकल्पा च चिन्मात्रवृत्तिः प्रज्ञेति कथ्यते ॥८०॥
सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते ॥८१॥

देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके ॥ ८२ ॥
यस्य नो भवतः क्वापि स जीवन्मुक्त उच्यते॥८३॥
न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ॥ ८४ ॥
प्रज्ञया यो विजानाति स जीवन्मुक्त उच्यते ॥८५॥
साधुभिः पूज्यमानोऽपि पीड्यमानोऽपि दुर्जनैः॥८६॥
सममेव भवेद्यस्य स जीवन्मुक्त उच्यते ॥ ८७ ॥
यथास्थितमिदं यस्य व्यवहारवतोपि च ॥ ८८ ॥
अस्तंगतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥८९॥

( टीका ) स्वाज्ञविकल्पितस्वातिरिक्तप्रपंचगतनानाविकल्प सनिर्विकल्पा च सा चिन्मात्रगोचरवृत्तिरेव ब्रह्मात्मगोचरप्रज्ञा कथ्यते यस्य योगिनः सर्वदा सा प्रज्ञा भवेत् स जीवन्मुक्त उच्यते ॥८०॥८१॥ स्थूलोऽहं कृशोऽहं शृणोमि पश्यामीत्यादिदेहेन्द्रियेषु अहंभावः तदन्यके क्षेत्रदारादाविदंभावस्तावुभावपि क्वापि कचित् यस्य नो भवतः सोऽयं मुनिर्जीवन्मुक्त उच्यते ॥ ८२ ॥ ८३ ॥ व्यष्टिप्रपंचास्पदं प्रत्यक्समष्टिप्रपंचास्पदं ब्रह्म तयोर्भेदमाधाराधेययोर्ब्रह्मसर्गयोः आधाराधेयता कार्यकारणता भास्यभासकता वा नास्तीति कथापि कथां च प्रज्ञया यो न विजानाति स जीवन्मुक्त उच्यते ॥८४॥८५॥ ब्रह्मविद्वरः साधुजनैरीश्वरधिया पूजितो दुर्जनैर्भ्रांतोऽयमिति ताडितोपि पूजकताडकतत्कर्मादिकं ब्रह्मेतिधिया यस्य चित्तं सममेव भवेत् स जीवन्मुक्त उच्यते ॥८६॥ ॥ ८७ ॥ यस्य प्रत्यगभिन्नब्रह्मभावापन्नस्य निर्विकल्पसमाधिजोव्यवहारवतोपि वा स्वयादितव्यवहारदशयोरपि घटशरावादिस्थितमस्तंगतं वा तदवच्छिन्नव्योमवदिदं ब्रह्मतत्त्वं स्वाज्ञादिहे मोहे सत्यसति यथास्थितं भवति स जीवन्मुक्त उच्यते ॥८८॥

नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा ॥९०॥
यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥९१॥
योजागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ॥९२॥
यस्य निर्वासनोबोधः स जीवन्मुक्त उच्यते ॥९३॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ॥ ९४ ॥
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥९५॥
यस्य नाहंकृतोभावो बुद्धिर्यस्य न लिप्यते ॥९६॥
कुर्वतोऽकुर्वतोवापि स जीवन्मुक्त उच्यते ॥९७॥
यस्मान्नोद्विजते लोकोलोकान्नो द्विजते च यः ॥९८॥
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ९९ ॥

( टीका ) यस्य ब्रह्मविद्वरस्य मनःप्रभा प्रसन्नता सुखाभासोदये नोदेति नाधिकविकासतामेति दुःखाभासोदयेपि नास्तं वैवर्ण्यमायाति ब्रह्मातिरिक्तं न किंचिदस्तीति यथा प्राप्तस्थितिर्भवेत् सोयं तादृशमनःप्रसादवान् जीवन्मुक्त उच्यते ॥ ९०॥९१ ॥ यः प्रत्यक्स्वरूपात्मना द्वैतसामान्यस्फुरणसुषुप्तौ तिष्ठतीति सुषुप्तिस्थोऽपि रागादिकरणग्रामवत्स्वयं सुषुप्तिं नैति किंतु जागर्ति सुखमहमस्वाप्समिति प्रतीतिदर्शनात् तर्हीन्द्रियेन्द्रियार्थग्रहणलक्षणजागरणमस्य विद्यत इत्यत्राह यस्येति यस्य निरवस्थस्य जाग्रत् तदुपलक्षितावस्थात्रयमपि न विद्यते यस्य बोधनिर्वासनोबोधः अवस्थात्रयविकाररहितोभवति स जीवन्मुक्त उच्यते ॥९२॥९३॥ अवस्थात्रयविकाररहितोभवति स जीवन्मुक्त उच्यते ॥९२॥९३॥ द्वैतजं भयं कामाद्यस्वाभिलषितविषयस्पृहारागस्तदलाभजोद्वेषः द्वैतजं भयं कामाद्यरिषड्वर्ग आदिशब्दार्थः परदृष्ट्या रागादितत्तद्वृत्यनुरूपं चरन्नपि योयं मुनिर्घटशरावांतस्थव्योमवत् अतिस्वच्छरूपोभवति स जीवन्मुक्त उच्यते ॥ ९४ ॥ ९५ ॥ यस्य निर्विशेषब्रह्मविदः

१ ब्रह्मव्यतिरिक्तस्य वस्तुनोऽभावादिति नियमात् ।

साध्वसाधुकर्म कुर्वतोऽकुर्वतोवाऽपि देहाद्यवष्टंभेनाहमिदं सा
साधु कर्म करोमीत्यहंकृतोभावोन विद्यते यस्य बुद्धिः पुष्कर
स्थजलबिंदुवत्कर्मणि तत्फले तदन्यत्र वा न लिप्यते सोऽयं मु
स जीवन्मुक्त उच्यते ॥ ९६ ॥ ९७ ॥ यस्माद्योगिनः सका
देतल्लोकोनोद्विजते योलोकादपि नोद्विजते ब्रह्मविद्वरस्य स
त्मारामतया स्वस्मात्परस्य परस्मात्स्वस्य वा नोद्वेगः संभवति
स्वभावतोहर्षामर्षभयोन्मुक्तः कुत्रापि हर्षविषादभयशून्योभवति
जीवन्मुक्त उच्यते ॥ ९८ ॥ ९९ ॥

यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ॥१
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥१
प्रजहाति यथा कामान् सर्वान् चित्तगतान्मुने।
मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते॥१
चैत्यवर्जितचिन्मात्रे पदे परमपावने ॥ १०४॥
अक्षुब्धचित्तोविश्रान्तः स जीवन्मुक्त उच्यते।
इदं जगदयं सोऽयं दृश्यजातमवास्तवम् ॥ १०
यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते॥१
शांतसंसारकलनः कलावानपि निष्कलः ॥ १
यः सचित्तोपि निश्चित्तः स जीवन्मुक्त उच्यते।

(टीका) यथा परस्माज्ञास्त्रविकल्पितशब्दाद्यर्थेषु मुह
र्व्यवहरन् शांतचित्तो भवति परिच्छिन्नदेहात्मदृष्टित्वात् न
योऽयं तु ब्रह्मविद्वरीयान् समस्तकरणाभासग्राह्यार्थाभासजा
देहधारणमात्रोपयोगितया व्यवहार्यपि स्वात्मात्मीयाज्ञानताप
वाच्छीतलः परिशांतांतरोभूत्वा यन्मया पूरितं विश्वं महाक
श्रुना यथेतिश्रुत्यनुरोधेन सर्वत्र परिपूर्णात्मा भवति स जीव
उच्यते ॥ १०० ॥ १०१ ॥ हे मुने ऋषे यदा यस्मिन्

कामाभासप्रसक्तिर्भवेत्तदा चित्तगतान् सर्वान् कामान् प्रजहाति स्वातिरिक्तकामजाततद्धेतुचित्तादिकं नास्तीति मयि सर्वात्मके प्रत्यगभिन्नपरमात्मनि यस्तुष्टः स्वानंदभरितोभवति स जीवन्मुक्त उच्यते ॥ १०२ ॥ १०३ ॥ चेतोवृत्तिविकल्पितविषयजातं चैत्यं तदपवादाधिकरणतया तद्वर्जिताचिन्मात्रे ब्रह्मविद्वरिष्ठैरात्मतया सेवनीयपरमपावने पदे त्रिपादस्यामृतन्दिवीति श्रुतिसिद्धनिर्विशेषत्रिपदि योऽक्षुब्धचित्तः सन् विश्रान्तोभवति स जीवन्मुक्त उच्यते ॥ १०४ ॥ १०५ ॥ इदं परिदृश्यमानं नामरूपात्मकं जगत् अयमन्यः सोऽहमेवंविधः अयं मे पिता इयं मे मातेत्याद्यवास्तवं दृश्यजातं यस्य ब्रह्मविद्वरीयसश्चित्ते कदापि न स्फुरति स जीवन्मुक्त उच्यते ॥ १०६ ॥ १०७ ॥ यः स्वदृष्ट्या संशांतजननमरणपरंपरारूपसंसारकलनोभवति यः स्वाज्ञदृष्ट्या षोडशकलाविकारदेहवान् चित्तवानपि प्राणादिनामांतषोडशकलाभावान्निष्कलः स्वांतःकरणवैरल्यान्निश्चित्तोभवति स जीवन्मुक्त उच्यते ॥ १०८ ॥ १०९ ॥

चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः ॥११०॥
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥१११॥
देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ॥ ११२ ॥
ब्रह्माहमिति यस्यांतः स जीवन्मुक्त उच्यते ॥११३॥
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः॥११४॥
परमानंदपूर्णोयः स जीवन्मुक्त उच्यते ॥ ११५ ॥
नित्यानंदः प्रसन्नात्मा ह्यन्यचिंताविवर्जितः ॥११६॥
किंचिदस्तित्वहीनोयः स जीवन्मुक्त उच्यते ॥११७॥
अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ॥११८॥
चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ॥११९॥

( टीका ) अचिद्व्यष्टिप्रपंचापवादाधारतया चिदात्माहं स
ष्टिप्रपंचादपि परत्वेन विभानात् परमात्मागुणत्रयापवादाधार
गुणोऽहं परस्मात्साक्षिणोपि परत्वेन विभानात् परात्परोऽहं
स्वविकल्पितानात्मापन्हवसिद्धात्ममात्रेण यः सदा तिष्ठति स जी
न्मुक्त उच्यते ॥ ११० ॥ १११ ॥ देहत्रयातिरिक्तोऽहं स्थूलं
देहत्रयापवादाधारप्रत्यग्रूपत्वात् शुद्धचैतन्यमस्म्यहमशुद्धप्रपं
वादाधारशुद्धचैतन्यत्वात्,यस्यांतर्हृदये ब्रह्माहमस्मीत्यखंडाकार
सदा स्फुरति स जीवन्मुक्त उच्यते ॥ ११२ ॥ ११३ ॥
देहादिकं देहादित्वेन नास्ति यस्य देहादिप्रपंचजातं ब्रह्मेतिनिश्च
भवति यः परमानंदपरिपूर्णस्वांतोभवति स जीवन्मुक्त उ
॥ ११४ ॥ ११५ ॥ अनित्यदुःखाभावान्नित्यानंदः अपरोक्ष
स्वात्मत्वात् मत्स्वात्मा स्वातिरेकेणान्यदस्तीत्यन्यचिंताविवर्
प्रातिभासिकरूपेण वा किंचिदस्ति नास्तीति विभ्रमहीनोभ
हि शब्दः स्वातिरिक्तासंभवद्योतकः स जीवन्मुक्त उच्यते॥११
॥ ११७ ॥ योऽहं प्रत्यग्रूपचिदात्मा सोऽहं परं ब्रह्मास्मीत्यर्थः
ब्रह्म चिदहमिति योन्वहं भावयति स जीवन्मुक्त उच्यते इत्यु
थावृत्तिरादरार्था ॥ ११८ ॥ ११९ ॥ आहत्यवाक्यान्येकाधि
चतुःशतं ॥ ४०१ ॥ जीवन्मुक्तिप्रकरणविवरणं संपूर्णम् ॥
जीवन्मुक्तिमहावाक्यजातार्थलब्धजीवन्मुक्तिपदारूढानां स्वादु
प्रकटयितुं जीवन्मुक्तिवाक्यान्येकोनविंशत्यधिकशतम् ॥

ॐ तत्सदितिसार्द्धांतिकजीवन्मुक्तिवाक्यान्येकोनविंशत्यधि
शतम् ॥

अथ सार्द्धांतिकस्वानुभूतिवाक्यानि

योसावसौ पुरुषः सोहमस्मि ॥ १ ॥

तयोऽहं सोऽसौ योऽसौ सोऽहम् ॥ २ ॥
तं शांतमचलमद्वयानंदचिद्घन एवास्मि ॥ ३ ॥
तत्पूर्णानंदैकबोधस्तद्ब्रह्मैवाहमस्मि ॥ ४ ॥
त्वंवाहमस्मि भगवो देवतेऽहंवै त्वमसि ॥ ५ ॥
सच्चिदानंदात्मकोऽहमजोऽहं परिपूर्णोऽहमस्मि ॥६॥
शुद्धाद्वैतब्रह्माहम् ॥ ७ ॥
वाचामगोचरनिराकारपरब्रह्मस्वरूपोऽहमेव ॥ ८ ॥

(टीका) अथ साद्धांतिकस्वानुभूतिमहावाक्यानि लिख्यंते योऽसावित्यादिना योऽसौ विश्वारोपाधारेश्वरात्मनावस्थितः सोऽसौ क्षराक्षरप्रपंचापवादाधारः पुरुषः पुरुषोत्तमो भवति यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इतिस्मृतेः यः पुरुषोत्तमत्वेन विख्यातः सोऽहमस्मि भवामीत्यर्थः ॥१॥ तत्तत्र देहे योऽहं प्रज्ञात्मा भागोध्यात्मं सोऽसावादित्यमंडलाभिमानी नान्यः योऽसावादित्ये पुरुषोवर्तते सोऽहं स एवाहं नान्योऽस्मि पुरुषादित्यगतप्रत्यक्परहेयांशापायसिद्धचैतन्यस्यैकत्वात् स यश्चायं पुरुषे यश्चासावादित्ये स एक इतिश्रुतेः ॥ २ ॥ यः प्रत्यगभिन्नपरमात्मतया 'तत्त्वमस्यादिमहावाक्यप्रतिपादितः तं मां प्रत्यक्परविभागैक्यगतविशेषांशशांतं कूटस्थरूपादचलं ब्रह्मविदोजानंति अहं तु द्वैतदुःखजडप्रपंचापन्हवसिद्धनिष्प्रतियोगिकानंदचिद्घनएवास्मिनान्य इत्यर्थः ॥ ३ ॥ यत्तत्पदलक्ष्यपरिपूर्णानंदैकबोधरूपेणावशिष्यते तत्तादृग्विधं ब्रह्मैवाहमस्मि ब्रह्मातिरिक्तवस्त्वन्तराभावादित्यर्थः ॥ ४ ॥ हेभगवो भगवति सन्मात्ररूपिणी देवते त्वमेवाहमस्मि अहमेव त्वमसि प्रत्यक्परूपयोरावयोरंतरं नविद्यत इत्यर्थः ॥ ५ ॥ अनृतप्रपंचग्रासं सत् जडप्रपंचग्रासरूपिणी चित्तदुःखप्रपंचग्रास आनंदश्चआत्मा स्वरूपं यस्य सच्चिदानंदात्मकोऽहं स्वस्मा-

दन्यन्न जायतेऽन्यस्मादपि स्वयं नजायत इत्यजोऽस्मि स्वाभि पदसत्त्वे तत्परिपूर्णोऽहमस्मि तदभावे निष्प्रतियोगिकपूर्णोऽस्मीत् ॥ ६ ॥ अशुद्धद्वैतापन्नत्वसिद्धशुद्धाद्वैतरूपेण बृंहणाद्ब्रह्माहं जीवोस्मीत्यर्थः ॥ ७ ॥ वाङ्मनोगोचरसाकारप्रपंचापत्वादाधार ज्ञानसगोचरनिराकारत्वोपबृंहितब्रह्मस्वरूपोऽहमेव नान्य इत्य

सदोज्ज्वलोऽविद्या तत्कार्यहीनः स्वात्मबंधहर सर्वदा द्वैतरहित आनंदरूपः सर्वाधिष्ठानसन्मात्रो रस्ताविद्या तमोमोहोऽहमेवाहमोम् तत्सद्यत्परं ब्र रामश्चंद्रश्चिदात्मकः सोऽहमोम् तद्रामभद्रः परंज्योति सोऽहमोम् ॥ ९ ॥ तत्परः परमपुरुषः पुराणपुरुषोत्त नित्यशुद्धबुद्धमुक्तसत्यपरमानंदानंताद्वयपरिपूर्णः परम त्मा ब्रह्मैवाहं रामोऽस्मि ॥ १० ॥

(टीका) निष्प्रतियोगिकब्रह्मप्रकाशतया ब्रह्मविद्भिरेषु सदो ज्ज्वलति प्रकाशत इति सदोज्ज्वलः ममाधिष्ठरिष्ठत्वयोगेऽहत्ववि स्वात्मबंधः स्यादित्यत आह अविद्येति स्वदृष्ट्या या न वि साऽविद्या तत्कार्याण्यनंतकोटिब्रह्मांडानि तत्प्रसक्तस्तद्वि स्वाज्ञदृष्टिप्रसक्ताविद्याकृतस्वात्मबंधं जीवत्वं ब्रह्माहमिति स्व खड्गेन हरति खंडयतीति स्वात्मबंधहरः स्वातिरेकेण बंधं कल्प्य तद्धरणव्यापारतो द्वैतापत्तिः स्यादित्यत आह सर्वदेति स कालत्रयेऽपि बंधतद्धरणव्यापृतेर्मायिकत्वात् द्वैतरहितः स्व द्वयत्वेन निरानंदता स्यादित्यत आह आनंदरूप इति आनंदमा पस्य निरानंदता कुत इत्यर्थः स्वाज्ञदृष्ट्या निरानंदोविषयानं ऽपि स्यादित्यत आह सर्वेति स्वातिरिक्तदुःखानंदसत्त्वे तत्सर्वाधि नतया सन्मात्ररूपोऽस्मि अधिष्ठेयसापेक्षाधिष्ठानयोगतः स्व धातत्कार्यग्रस्तता स्यादित्यत आह निरस्तेति स्वाज्ञविकल्पित

ध्येयसापेक्षाविद्याकृताभिज्ञानतमोमोहो यद्ज्ञाननिरस्तः स निरस्ताविद्यातमोमोहोऽहमेव यदहमोङ्कारार्थतुर्यतुरीयं ब्रह्म तत्सन्मात्रं परं ब्रह्म तन्मात्रतया राजते महीयते स्वातिरिक्तप्रपंचद्रावकश्च भवतीति रामचंद्रोऽहं योऽहं रामचंद्ररूपेण चिदात्मकः सोऽहमोंतुरीयोंकाराग्रविद्योतं ब्रह्म यदेवंविधं तद्रूपतो राजमानं महः स्वभक्तपटलकैवल्यरूपभद्रप्रदं सत्सर्वस्मात्परमत्वेन ज्वलतीति परञ्योतीरसोऽहं थोंतत्परं ब्रह्माहमस्मि तत्परः परमात्मेति श्रुतेः ॥ ९ ॥ यस्त्वकारोकारमकारबिंदुनादकलाकलातीतमात्रायाः परतो विभातः सोऽयं तत्परः सर्वोत्तमत्वात् परमपुरुषः क्षराक्षरकलनातीतत्वात् पुराणपुरुषोत्तमः अनित्यप्रपंचसत्ताप्रदत्वान्नित्यः अशुद्धोपाध्यभावाच्छुद्धः पूर्णबोधस्वरूपेण स्वेनैव बुद्धोऽस्मि माया तत्कार्यबंधतो मुक्तोऽस्मि कालत्रयाबाध्यसन्मात्रत्वात् सत्योऽस्मि निरतिशयभूमानंदत्वात्परमानंदोस्मि परिच्छेदत्रयाभावादनंतोऽस्मि अपूर्णद्वैतासंभवादद्वैतपूर्णोस्मि विराडादितुरीयांतकलनापरतो निर्भानात्परमात्मरूपोस्मि तद्रूपेण सर्वत्र ब्रह्मणा अभेदाहमस्मि अखिलाद्वासपरमशाद्भारूपोऽस्मि ॥ १० ॥

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ॥ ११ ॥
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १२ ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ १३ ॥
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १४ ॥
निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः ॥ १५
चिदात्मास्मि निरंशोऽस्मि परापरविवर्जितः ॥ १६ ॥
अग्निरहं सर्ववेदांतवेद्यं नाहं वेद्यं व्योमवातादिरूपम् ॥ १७ ॥
रूपं नाहं नाम नाहं न कर्म ब्रह्मैवाहं सच्चिदानंदरूपम् ॥ १८ ॥
नित्यशुद्धोबुद्धमुक्तस्वभावः
सत्यः सूक्ष्मः सन्विभुश्चाद्वितीयः ॥ १९ ॥

आनंदाब्धिर्यत्परः सोऽहमस्मि
प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २० ॥

(टीका) लोकत्रयदेहत्रयावस्थात्रयगुणत्रयात्मसु त्रि
धामसु यद्भोज्यादिनानाविधत्रिपुटीरूपं भवेत्तेभ्यस्त्रिधामत्वं
भ्यादित्रिपुटीविकारेभ्योविलक्षणः साक्षी स्वातिरिक्तसाक्ष्यभाव
त्वाच्चिन्मात्रोऽहं सदा कैवल्यरूपेण स्थितत्वात्सदाशिवोऽस्मि
॥ ११ ॥ १२ ॥ जगत्कारणभावमापन्ने मय्येव सकलं येन
कला तत्कार्यजगज्जातरज्जुसर्पवत् कल्पितं यावत् स्वज्ञानं मयि
प्रतिष्ठितवद्भाति मद्व्यतिरिक्तं न किंचिदस्तीति श्रुतिसिद्धस
अज्ञानान्मयि सर्वं लयं याति यदुक्तप्रपंचारोपापवादास्पदं तद्
ह्माद्वयमस्म्यहं ॥१३॥१४॥ नित्यमोक्षस्वरूपत्वान्निर्वाणरूपोऽस्मि
मनोवृत्तिसामान्याभावान्निरीहोऽस्मि जगज्जीवेशादिविभागाभा
वान्निरंशरूपोऽस्मि इच्छाविषयीभूतसंवेद्याभावान्निरीप्सितोऽस्मि
अचिदनात्माभावाच्चिदात्मरूपोऽस्मि अविभक्तचतुष्पदत्वान्निरंशरू
पोऽस्मि॥१५॥ शिवजीवाभिधानपरापरकलनाविहीनोऽस्मि॥१६
यदीशाद्यष्टोत्तरशतसर्ववेदांततोऽतन्निरसनमुखेन स्वेनैव वेद्यं त
ब्रह्मैवाहमस्मि व्योमवातादिपंचमहाभूतभौतिकरूपप्रपंचमहं न भ
मि । अनृतजडदुःखात्मकनामरूपकर्मजुष्टप्रपंचापवादाधारं
सच्चिदानंदरूपं ब्रह्मैवाहमस्मि ॥ १७ ॥ १८ ॥ नित्यं शुद्धो बु
मुक्त इतिचतुष्टयं तत्पर इत्यस्मिन्वाक्ये व्याख्यातं स्वेनैव भव
स्वभावः पारमार्थिकत्वात्सत्यः सूक्ष्मबुद्ध्यनुगमात्सूक्ष्मः सर्वा
विम्बाकाशानुगमात्सर्वविभुश्चास्मि द्वैतप्रपंचाभावादद्वितीयोऽस्मि
परिच्छिन्नानंदरूपत्वादानंदाब्धिरस्मि यदितिलिंगव्यत्ययः
पराक्प्रपंचप्रातिलोम्येनांचतीति प्रत्यक्स चासौ प्रपंचाधारो धातु
प्रत्यग्धातुः प्रत्यगभिन्नपरमात्मा भवति सोऽहंपरः परमात्माऽस्मीत्य
न संशीतिः संशयोऽस्ति ॥ १९ ॥ २० ॥

सोऽहमर्कः परंज्योतिरर्कज्योतिरहं शिवः ॥ २१ ॥
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावहोम् ॥२२॥
द्वैतभावविमुक्तोऽस्मि सच्चिदानंदलक्षणः ॥ २३ ॥
शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ २४ ॥
निष्क्रियोस्म्यविकारोऽस्मि निर्गुणोऽस्मि निराकृतिः २५॥
निर्विकल्पोऽस्मि नित्योऽस्मि निरालंबोऽस्मि निर्द्वयः२६॥
केवलाखंडबोधोऽहं स्वानंदोऽहं निरंतरः ॥ २७ ॥
सत्यं ज्ञानमनंतं यत्परं ब्रह्माहमेव तत् ॥ २८ ॥
केवलं चित्सदानंदं ब्रह्मैवाहं जनार्दनः ॥ २९ ॥
अशुभाशुभसंकल्पैः संशांतोऽस्मि निरामयः ॥३०॥

( टीका ) योऽर्कादिस्थूलप्रपंचावभासकपरंज्योतीरूपश्चिदर्कः सोऽहं चिदर्कज्योतिः शिवश्चाहं शुक्रः स्वच्छः प्रत्यगात्मज्योतिरहमसौ ॐकारार्थविश्वविश्वाद्यविकल्पानुज्ञैकरसांतः सर्वज्योतिः परायणातुर्यतुर्योऽहं ॥ २१॥२२ ॥ द्वैतभावविमुक्तोऽस्मि अद्वैतत्वात् सच्चिदानंदलक्षणः अनृतजडदुःखप्रपंचापवादाधारत्वात् अत एव शुद्धबोधस्वरूपोऽहं कार्यकारणनिर्मुक्तपूर्णबोधस्वरूपत्वात् केवलोऽहं अशेषविशेषाभावात् स्वातिरिक्ताशिवप्रहाणात्सदाशिवोऽहं ॥२३॥ ॥२४॥क्रियाकारकाभावान्निष्क्रियोऽस्मि विकाराभावादविकारोऽस्मि गुणत्रयाभावान्निर्गुणोऽस्मि निरुपाधिकत्वान्निराकृतिरस्मि नानाविकल्पाभावान्निर्विकल्पोऽस्मि अनित्यप्रपंचाभावान्नित्योस्मि ॥२५॥ स्वातिरिक्तप्रतीकालंबनाभावान्निरालंबोस्मि द्वयरहितत्वान्निर्द्वयः ॥२६॥ केवलनिर्विशेषखंडबोधोऽहं,निरंतरस्वानंदोऽहं असत्याज्ञानपरिच्छेदत्रयाभावाद्यत्सत्यज्ञानानंतरूपं तत्परं ब्रह्माहमेव ॥२७॥ ॥ २८ ॥ केवलनिर्विशेषचिद्घनानंदघनोहं भजद्भक्तजन्मनाशावर्दयतीति जनार्दनोहं प्रवृत्तिनिवृत्यात्मकशुभाशुभसंकल्पजालसंशांतोऽस्मि स्थूलदेहाभावान्निरामयोऽस्मि ॥ २९ ॥ ३० ॥

नष्टेष्टानिष्टकलनः संविन्मात्रपरोऽस्म्यहम् ॥ ३१॥
अंतर्याम्यहमग्राह्योनिर्देश्योऽहमलक्षणः ॥ ३२ ॥
अद्वैतोऽहमपूर्णोऽहमबाह्योऽहमनंतरः ॥ ३३ ॥
अद्वयानंदविज्ञानघनोऽस्म्यहमविक्रियः ॥ ३४ ॥
अविद्याकार्यहीनोऽहमवाङ्मनसगोचरः ॥ ३५ ॥
आत्मचैतन्यरूपोऽहमहमानंदचिद्घनः ॥ ३६ ॥
आप्तकामोऽहमाकाशात्परमात्मेश्वरोस्म्यहम् ॥३
चिदानंदोऽस्म्यहं चेता चिद्घनश्चिन्मयोऽस्म्यहम्॥
ज्योतिर्मयोऽस्म्यहं ज्यायान्ज्योतिषां ज्योतिरस्म्यहम्॥
नित्योऽहं निरवद्योऽहं निष्क्रियोऽस्मि निरंजनः॥
निर्मलोनिर्विकल्पोऽहं निराख्यातोऽस्मि निश्चलः॥
निर्विकारोनित्यपूतोनिर्गुणोनिस्पृहोस्म्यहम् ॥ ४१

( टीका ) इष्टानिष्टात्मकमित्रामित्रकलनाशून्योऽहं संविन्मात्रपरब्रह्मास्म्यहं सर्वप्रेरकत्वादन्तर्याम्यहं करणाग्राह्यत्वादग्राह्यो स्वभेदेन निर्देष्टुमशक्यत्वादनिर्देश्योऽहं लक्षणागम्यत्वादलक्षणो ॥ ३१ ॥ ३२ ॥ स्वज्ञदृष्ट्याद्वैतोऽहं स्वाज्ञदृष्टिविकल्पितजीवरूपेणापूर्णोऽहं बाह्यांतःकलनाभावादबाह्यमनंतरोऽहं अत एव वाङ्मनसगोचरोऽहं प्रत्यगभिन्नपरमात्मचैतन्यरूपोऽहं अत एव भूमानंदचिद्घनोऽहं ॥३५॥३६॥ अवाप्तसमस्तकामत्वादाप्तकामोऽहं आकाशादिभूतभौतिकादपि परमत्वेनात्मत्वेन च स्वातिरिक्तापन्हवीकरणे ईश्वरोऽस्म्यहं अचिद्दुःखाभावाच्चिदानंदोऽस्मि चेता चैतन्यरूपोऽहं चिद्घनश्चिन्मयोऽस्म्यस्म्यहमुक्तार्थं ॥ ३७॥३८ ॥ प्रकाशस्वरूपत्वाज्ज्योतिर्मयः स्वाविद्यापादादपि ज्यायानहं सूर्यादिज्योतिषामप्यवभासकज्योतिरस्म्यहं नित्योऽहमनित्याभावात् अत एव निरवद्योऽहमकुत्सितत्वात् निष्क्रियोस्मि अविक्रियत्वात् निरंजनः सर्वथा

संगत्वात् ॥३९॥४०॥ मायामलराहित्यान्निर्मलोऽहं विकल्पाभावा-न्निर्विकल्पोऽहं आख्यानाभावान्निराख्यातोऽस्मि पूर्णत्वान्निश्चलोऽहं वयःकृतविकाराभावान्निर्विकारोऽहं नित्यशुद्धत्वान्नित्यपूतोऽहं हेयगु-णाभावान्निर्गुणोऽहं स्पृहणीयसंवेद्याभावान्निस्पृहोऽहं ॥४१॥४२॥

निरिन्द्रियोनियंताहं निरपेक्षोस्मि निष्कलः ॥४३॥
पुरुषः परमात्माहं पुराणः परमोऽस्म्यहम् ॥ ४४ ॥
पूर्णानंदैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ ४५ ॥
प्रज्ञानोऽहं प्रशांतोऽहं प्रकाशः परमेश्वरः ॥ ४६ ॥
एकधा चिंत्यमानोऽहं द्वैताद्वैतविलक्षणः ॥ ४७ ॥
शुद्धोऽस्मि शुक्रः शांतोऽस्मि
शाश्वतोऽस्मि शिवोऽस्म्यहम् ॥ ४८ ॥
अहं सकृद्विभातोऽस्मि स्वे महिम्नि सदास्थितः॥४९
सच्चिदानंदमात्रोऽहं स्वप्रकाशोऽस्मि चिद्घनः ॥५०॥
मानावमानहीनोऽस्मि निर्गुणोऽस्मि शिवोऽस्म्यहम्॥५१॥
द्वैताद्वैतविहीनोऽस्मि द्वंद्वहीनोऽस्मि सोऽस्म्यहम् ॥५२॥

(टीका) अकारणत्वान्निरिंद्रियोऽहं अंतर्यामित्वान्नियंताहं अपेक्षणीयवस्त्वभावान्निरपेक्षोऽस्मि षोडशकलाभावान्निष्कलोऽहं पूर्णत्वात्पुरुषः जीवेश्वरविलक्षणत्वात्परमात्माहं चिरंतनत्वात्पुराणोऽहं सर्वोत्कृष्टत्वात्परमोऽस्म्यहं ॥४३॥४४॥ पूर्णानंदतया कोऽस्मीति बोधमात्ररूपोऽहं सर्वप्रत्यगात्मतयैकरसोऽस्म्यहं निष्प्रतियोगिकस्वमा-त्रतया प्रज्ञातोऽहं प्रकर्षेण स्वातिरिक्तशांतोऽहं स्वयं प्रकाशमात्रोऽहं परमेश्वरोऽहं सर्वेश्वरत्वात् ॥ ४५ ॥ ४६ ॥ ब्रह्मविद्वरिष्ठैः सर्वा-पन्हवसिद्धं ब्रह्मनिष्प्रतियोगिकस्वमात्रमित्येकधा चिंत्यमानोऽहं सप्रतियोगिकद्वैताद्वैतयोः सविशेषत्वेन तद्विलक्षणोऽहं निष्प्रतियो-गिकपरमाद्वैतरूपत्वात् अशुद्धाज्ञानाभावाच्छुद्धोऽस्मि स्वच्छत्वा-

शुक्रोऽस्मि स्वातिरिक्तत: शांतोऽस्मि ध्रुवत्वात् शाश्वतोऽस्मि परमकल्याणकैवल्यरूपत्वाच्छिवोऽस्मि ॥ ४७॥४८ ॥ सदायात्रित्रयाभावादहं सकृद्विभातोऽस्मि सर्वदा स्वे महिम्नि स्थितोऽस्मि अनृतजडदुःखप्रपंचाभावान्निष्प्रतियोगिकसच्चिदानंदमात्रोऽहं स्वप्रकाशरूपत्वेन चिद्घनोऽस्मि ॥ ४९॥५० ॥ देहाभिमानाभावान्मानावमानहीनोऽस्मि निर्गुणत्वाच्छिवोऽस्मि योऽहंतादिद्वंद्वनाहीनः सोऽहमस्मि ॥ ५१ ॥ ५२ ॥

भावाभावविहीनोऽस्मि भासाहीनोऽस्मि भास्म्यहम् ।
शून्याशून्यविहीनोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥५४॥
सदसद्भेदहीनोऽस्मि संकल्परहितोऽस्म्यहम् ॥ ५५ ॥
नानात्मभेदहीनोऽस्मि ह्यखंडानंदविग्रहः ॥ ५६ ॥
बंधमोक्षविहीनोऽस्मि शुद्धं ब्रह्मास्मि सोऽस्म्यहम् ॥५७॥
चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात्परः ॥ ५८ ॥
सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥
ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥
लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ॥ ६१ ॥
मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहं ॥ ६२ ॥

( टीका ) स्वातिरिक्तकलनास्तिनास्तीति प्रतीत्यभावाद्भावाभावविहीनोऽस्मि वागादिकरणाभावाद्भाषाहीनोऽस्मि स्वमात्रभास्म्यवस्थात्रयाभावात् शून्याशून्यविहीनोऽस्मि शून्यं सुषुप्तिराम्नातं शून्यं जाग्रदादिकमिति चंद्रिकोक्तेः स्वातिरिक्तनिवृत्तिप्रवृत्त्यभावाच्छोभनाशोभनोऽस्म्यहं ॥ ५३॥५४ ॥ स्थूलसूक्ष्मप्रपंचकलनाभावात्सदसद्भेदहीनोऽस्मि अमनस्करूपत्वात्संकल्परहितोऽस्म्यहम् एकात्मावशेषत्वान्नानात्मभेदहीनोऽस्मि अपरिच्छिन्नानंदमात्रत्वादखं

१ द्वैताद्वैतविहीनोऽस्मि द्वंद्वहीनोऽस्मीत्यनयोर्वाक्ययोर्योगेनेयं टीका कृता ।

ज्ञानंदविग्रहोऽस्मि ॥५५॥५६॥ नित्यमोक्षस्वरूपत्वात्सापेक्षबंधमो-
क्षतत्साधनविहीनोस्मि शुद्धब्रह्मास्मीति योमन्यते ब्रह्मवित्सोप्यह-
मस्मि चित्ततत्कल्पितकलनासर्वस्वाभावाच्चित्तादिसर्वहीनोस्मि सर्वो-
त्कृष्टत्वात्परमोस्मि क्षराक्षरातीतपरात्परत्वात्परोस्मि ॥५७॥५८॥
सदा वेदांतविचारप्रादुर्भावाद्विचारगम्योस्मि वस्तुतोऽहं निर्विचा-
रोस्मि सोस्म्यहं ध्योत्रादिनानात्रिपुटीहीनोस्मि ॥ ५९ ॥ ६० ॥
जगज्जीवेशादिभेदवद्यल्लक्ष्यते द्वैतं तल्लक्ष्यं एवं यन्न लक्ष्यते
तदलक्ष्यमद्वैतं पदमद्वयत्वात् लक्ष्यालक्ष्यविहीनोस्मि स्वातिरिक्तं
यदास्ति इदानीं लीयत इति भ्रमाभावाल्लयहीनरसोस्म्यहं मात्रादि-
त्रिपुटीहीनोऽस्मि ॥ ६१ ॥ ६२ ॥
सर्वेंद्रियविहीनोऽस्मि सर्वकर्मकृदप्यहम् ॥ ६३ ॥
मुदितामुदिताख्योऽस्मि सर्वमौनफलोऽस्म्यहम् ॥ ६४ ॥
षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम् ॥ ६५ ॥
देशकालविमुक्तोऽस्मि दिगंबरसुखोऽस्म्यहम् ॥ ६६ ॥
अखंडाकाशरूपोऽस्मि ह्यखंडाकारमस्म्यहम् ॥ ६७ ॥
प्रपंचमुक्तचित्तोऽस्मि प्रपंचरहितोऽस्म्यहम् ॥ ६८ ॥
सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् ॥ ६९ ॥
कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ॥ ७० ॥
कायत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहं सदा ॥ ७१ ॥
शक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहं सदा ॥ ७२ ॥
गमनागमनहीनोऽस्मि गमनादिविवर्जितः ॥ ७२ ॥

( टीका ) वाक्श्रोत्रादिसर्वेंद्रियविहीनोऽपि तत्तत्प्राप्यात्मना
सर्वकर्मकृदप्यहं अपाणिपादोजवनोग्रहीतेत्यादिश्रुतेः स्वाभिन्नमोदनी-
यामोदनीयविषयत्वात् स्वज्ञस्वाज्ञाभ्यां मुदितामुदितोऽयमित्या-
ख्या यस्य सोऽहमस्मि स्वस्वविषयव्यावर्तनपूर्वकं वागाद्यंतःकरणा-

१ अत्रापि पूर्ववद्योगेन व्याख्या।

तत्सर्वमौनफलं ब्रह्मास्म्यहं ॥ ६३ ॥ ६४ ॥ जायतेऽस्ति वर्द्धते परिणमतेऽ
पक्षीयते विनश्यतीति षड्भावविकारवद्देहविलक्षणत्वात् षड्विकार-
हीनोऽस्मि त्वङ्मांसरुधिरस्नायुमज्जास्थिरूपषट्कोशरहितोऽस्मि देश
कालवस्तुपरिच्छेदाभावात् देशकालविमुक्तोऽस्मि अवधूतकदंबाल-
भावितसुखमात्ररूपोऽस्मि ॥ ६५ ॥ ६६ ॥ खंडाकाशग्रासचिदाकाशरू-
पत्वादखंडाकाशरूपोऽस्मि अखंडाकारवृत्तिगम्यत्वादखंडाकारं ब्र-
ह्माहमस्मि चित्तकल्पितप्रपंचरहितोऽस्मि निष्प्रपंचत्वात् ॥ ६७ ॥ ६८ ॥
सूर्यादिघटांतसर्वप्रकाशरूपोऽस्मि अचिन्मात्रग्रासचिन्मात्रज्योतिरं
भूतादिकालत्रयमुक्तोऽस्मि सर्वानर्थहेतुकामसंकल्पादिवृत्तिरहितोऽ-
स्म्यहं ॥ ६९ ॥ ७० ॥ बंधसापेक्षमुक्तिहीनोऽस्मि स्वाज्ञादिविकल्पि-
तबंधमोक्षभ्रमतोमुक्तोऽस्मि तूलांग्रविद्याद्वयापन्हत्वान्मोक्षहीनोऽस्मि
सदा स्वातिरेकेण गंतव्यदेशहीनोऽस्मि निरूपाधिकत्वाद्गमनादि
विवर्जितः ॥ ७१ ॥ ७२ ॥

सर्वदा समरूपोऽस्मि शांतोऽस्मि पुरुषोत्तम ॥ ७३ ॥
चिद्घनोऽहं सत्योऽहं वासुदेवोऽजरोऽमरः ॥ ७४ ॥
अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ॥ ७५ ॥
परं ब्रह्मस्वरूपोऽहं परमानंदमस्म्यहम् ॥ ७६ ॥
केवलं ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् ॥ ७७ ॥
केवलं शांतरूपोऽहं केवलं चिन्मयोऽस्म्यहम् ॥ ७८ ॥
केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम् ॥ ७९ ॥
केवलं सत्यरूपोऽहमहं त्यक्त्वाहमस्म्यहम् ॥ ८० ॥
केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि केवलः ॥ ८१ ॥

१ वागाद्यन्तःकरणान्तं सकलमहाविषयं ब्रह्मेति भावः । २ नित्यः
इति भावः । ३ तुलेति, अत्रादिपदेन मूलाविद्याग्राह्या । कार्याविद्याः
मूलाचकारणाविद्योच्यते ।

केवलाकाररूपोऽस्मि शुद्धरूपोऽस्म्यहं सदा ॥ ८२ ॥
निर्विकल्पस्वरूपोऽस्मि निरीहोऽस्मि निरामयः॥८३॥
अपरिच्छिन्नरूपोऽस्मि ह्यनंतानंदरूपवान् ॥ ८४ ॥
आत्मारामस्वरूपोऽस्मि ह्यहमात्मा सदाशिवः॥८५॥
आदिमध्यांतशून्योऽस्मि ह्याकाशसदृशोऽस्म्यहम्॥८६॥

( टीका ) स्वाज्ञदृष्टिविकल्पितविषमेषु सत्स्वपि सर्वदा समरूपोऽस्मि स्वातिरिक्तवैषम्यसाम्यतः शांतोऽस्मि अचित्क्षराभावाच्चिदक्षरोऽहं वसंत्यस्मिन् भूतानीति वासुः दीप्यत इति देवः वासुश्चासौ देवश्चेति वासुदेवोऽस्मि जरामरणाभावादजरामरोऽस्मि ॥ ७३ ॥ ७४ ॥ जगत्प्रपंचारोपापवादाधारतया परमाक्षरमद्वयं वासुदेवाख्यं तद्ब्रह्माहमस्मि परब्रह्मेत्युक्तार्थं ॥ ७५ ॥ ७६ ॥ सत्तास्वरूपत्वात्सत्स्वरूपोऽहं देहत्रयागोचराहंभावं त्यक्त्वाहमहमस्मि निर्विभागाहंपदार्थोऽस्मीत्यर्थः॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ अर्द्धमात्रासंगतया तुर्योऽस्मि अर्धमात्रातीतकेवलनिर्विशेषब्रह्मतया तुरीयातीतोऽस्मि ॥ ८१ ॥ ८२ ॥ अपरिच्छिन्नानंदरूपत्वात् अनंतानंदरूपोऽस्मि हिशब्दोनिःसंशयार्थः ॥ ८३ ॥ ८४ ॥ सर्वप्रत्यगभेदेनासमंताद्रमते महीयत इत्यात्मारामः निष्प्रतियोगिकपरमात्मरूपोऽस्मि आदिमध्यांतवदविद्यापादातीतत्वेन आदिमध्यांतशून्योऽस्मि ॥ ८५ ॥ ८६ ॥

नित्यशुद्धचिदानंदसत्तामात्रोऽहमव्ययः ॥ ८७ ॥
नित्यबुद्धविशुद्धैकः सच्चिदानंदमस्म्यहम् ॥ ८८ ॥
भूमानंदस्वरूपोऽस्मि भाषाहीनोऽस्म्यहं सदा ॥८९॥
सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम्॥९०॥

१ विषयगतविषयस्योपादानन्तु तद्विरुद्धसमत्वप्रापणाय । २ अर्धमात्रासंग इत्यनेन अर्धमात्रोंकारपदार्थाभेदोविवक्ष्यते ।

चित्तवृत्तिविहीनोऽहं चिदात्मैकरसोऽस्म्यहम् ॥ ९१ ॥
अहं ब्रह्मैव सर्वं स्यादहं चैतन्यमेव हि ॥ ९२ ॥
अहमेवाहमेवास्मि भूमाकारस्वरूपवान् ॥ ९३ ॥
अहमेव महानात्मा ह्यहमेव परात् परः ॥ ९४ ॥
अहमन्यवदाभामि ह्यहमेव शरीरवत् ॥ ९५ ॥
अहं शिष्यवदाभामि ह्यहं लोकत्रयाश्रयः ॥ ९६ ॥
अहं कालत्रयातीत अहं वेदैरुपासितः ॥ ९७ ॥
अहं शास्त्रेण निर्णीत अहं चित्ते व्यवस्थितः ॥९८॥
आनंदघन एवाहमहं ब्रह्मास्मि केवलम् ॥ ९८ ॥
आत्मनात्मनि तृप्तोऽस्मि ह्यरूपोह्यहमव्ययः ॥१००॥

अखंडानंदरूपत्वाद्भूमानन्दस्वरूपोऽस्मि अधिष्ठेयप्रपंचसत्ते तत्सर्वाधिष्ठानरूपोऽस्मि वस्तुतोनिरधिष्ठानतया च चिद्घनोऽस्मि चिन्मात्रोऽहमित्यर्थः ॥८७॥८८॥८९॥९०॥ अचिदंतःकरणाभावाच्चिदात्मैकरसोऽस्म्यहं स्वाज्ञदृष्ट्या यत्सर्वं स्यात्स्वज्ञदृष्ट्या तद्ब्रह्मचैतन्यमहमेव भूमाकारेणाहमहमेवास्मि नान्यः पराक्साक्षिणोऽपि परोमहानात्माहमेवहि ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ स्वाज्ञदृष्ट्याहं स्वान्यशरीरवद्गुरुशिष्यादिवद्भामि स्वज्ञदृष्ट्या भूरादिलोकत्रयोपलक्षिताविद्या पदाश्रयः परमेश्वरवदाभामि भूतादिकालत्रयातीतसाक्षित्वेदांतशास्त्रवेद्यवत् चित्तवृत्त्यवभासकप्रत्यगात्मवच्च भामि भूमानंदघन एवाहं अखंडानंदरूपत्वात् आत्मनाखंडाकारवृत्तिमन्मनसा स्वात्मन्येव तृप्तोऽस्मि पंचभूतविलक्षणात्वादरूपोह्यहं अतएवाऽव्ययोऽस्मि सन्मात्रत्वात् ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

आकाशादपि सूक्ष्मोऽहमाद्यंताभाववानहम् ॥ १०१ ॥
सत्तामात्रस्वरूपोऽहं शुद्धमोक्षस्वरूपवान् ॥ १०२ ॥

सत्यानंदस्वरूपोऽहं ज्ञानानंदघनोऽस्म्यहम् ॥ १०३ ॥
नामरूपविमुक्तोऽहमहमानंदविग्रहः ॥ १०४ ॥
आदिचैतन्यमात्रोऽहमखंडैकरसोऽस्म्यहम् ॥ १०५ ॥
सर्वत्र पूर्णरूपोऽहं परामृतरसोऽस्म्यहम् ॥ १०६ ॥
एकमेवाद्वितीयं सद्ब्रह्मैवाहं न संशयः ॥ १०७ ॥
अहमेव परं ब्रह्म त्वहमेव गुरोर्गुरुः ॥ १०८ ॥
सर्वज्ञानप्रकाशोऽस्मि मुख्यविज्ञानविग्रहः ॥ १०९ ॥
तुर्यातुर्यप्रकाशोऽस्मि तुर्यातुर्यादिवर्जितः ॥ ११० ॥
दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ॥ १११ ॥

( टीका ) शब्दगुणकाकाशादपि निर्गुणत्वेन सूक्ष्मोऽहं उत्पत्तिभयाभावात्सत्तामात्रस्वरूपोऽहं बंधसापेक्षविलक्षणत्वाच्छुद्धमोक्षस्वरूपत्वानस्मि नामरूपविलक्षणत्वेन सत्यज्ञानानंदरूपोऽस्मि स्वेतरासहं सत्तासामान्यरूपत्वादादिचैतन्यमात्रोऽहं खंडप्रपंचाभावादखंडैकरसोऽस्मि ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ सर्वत्राऽविद्यापदेऽखंडैकरसात्मना पूर्णरूपोऽहं परश्चासावमृतश्चेति परमानंदरसोऽस्म्यहं सजातीयविजातीयस्वगतभेदकमेवाद्वितीयं सन्मात्रं ब्रह्मैवाहमेव गुरोर्गुरुः जगद्गुरूणां ब्रह्मादीनामपि स्वविज्ञानोपदेष्टृत्वात् स्वज्ञस्वाज्ञदृष्टिभ्यां तुर्यप्राज्ञादिरूपेण भानात् तुर्यातुर्यप्रकाशोऽस्मि परमार्थदृष्टिविभातनिर्विशेषब्रह्ममात्ररूपेण तुर्यातुर्यादिवर्जितोऽस्मि आदिशब्देनावस्थाचतुष्टयमपि गृह्यते ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ सर्वात्रभासकप्रत्यक्स्वरूपोऽहं निरवयवत्वाद्गगनोपमानोऽस्मि माया तत्कार्यात्परोऽस्मि निरावृतत्वेन सदा विभानात् सकृद्विभातोऽस्मि

उच्यते यत्राहंकृतिस्तनुमात्रमेत्य बुध्यते स बुद्धिस्तत्कार्यं सुषुप्तिरुच्यते ॥ जाग्रदाद्यवस्थात्रयशांतिरेव निर्विकल्पसमाधिरित्यर्थः॥४॥ स्वातिरिक्तप्रसक्तौ तदुन्मूलनाय कर्णनासानयनद्वाराणि द्विकांगुलिभिरंगुष्ठतर्जनीमध्यमांगुलियुगलैः पराङ्मुखीकरणेन नासाग्रदर्शनदृढभावनया च रेचकपूरकविरलकेवलकुंभकावस्थायां ऊर्ध्वाधोवृत्तिमत्प्राणापानयोरैक्यं कृत्वाथ दीर्घघंटानिनादवदनाहताख्यहृदयं प्रणवध्वनिरुदेति तदवलंबनं मनोविलीयते तल्लयावस्थासमाधिरित्यर्थः ॥ ५ ॥ गोपालवत्सयोगतोधेनुस्तनगतपयःस्रावानंतरं तत्स्तनानां कंडूतिक्षयोभवति निरुपद्रवजनकधेनुस्तनक्षीरमिव योगिनो योगमहिम्ना स्वस्वविषयाग्रहणपूर्वकं वाक्श्रोत्रादिसर्वेन्द्रियवर्गे परिनष्टे सति योनिरालंबनमनोनाशोभवति सेयमपनस्कावस्थैव समाधिरित्यर्थः ॥ ६ ॥

यदा पंचावतिष्ठंते ज्ञानानि मनसा सह ॥ ७ ॥
बुद्धिश्च न विचेष्टंती तामाहुः परमां गतिम् ॥ ८ ॥
संशांतसर्वसंकल्पा या शिलावदवस्थितिः ॥ ९ ॥
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥१०॥
मारुते मध्यसंचारे मनस्थैर्यं प्रजायते ॥ ११ ॥
योमनःसुस्थिरीभावः सैवावस्था मनोन्मनी ॥ १२ ॥
सरूपो ऽसौमनोनाशो जीवन्मुक्तस्य विद्यते ॥ १३ ॥
लिङ्गाद्यरूपनाशस्तु वर्तते देहमुक्तिके ॥ १४ ॥

(टीका यदा तुर्यावस्थाविभक्तजाग्रदवस्थायां स्वांतर्बहिर्विषयसत्वेऽपि ब्रह्मैवेदं सर्वमिति श्रुत्यर्थानुभवज्ञानेन शब्दादिविषयाग्रहणपूर्वकं ज्ञानानि पंचज्ञानेन्द्रियाणि स्वयं ब्रह्माकारतयाऽवतिष्ठंते तद्धि तुर्यजागरणं यदहं ब्रह्मास्मीत्यनुभवतः संजातब्रह्मसाक्षात्कारपूर्वभाविमनःकामादिवृत्ति विहाय स्वयं निर्विकल्पकतयाऽवतिष्ठते

स तुरीयस्वप्नोभवति गुणसाम्यावस्थायामंतर्बहिःकलनाशून्यत्वेन यथा शुध्यते सैव शुद्धिः चशब्दस्तद्वृत्तिसमुच्चयार्थः पुनर्व्युत्थानपर्यंतं न विचेष्टतीति यत्तदेव तुरीयसुषुप्तिरेवं बुद्धेर्निर्विकल्पकावस्था यावशिष्यते तद्गतव्युत्थानकलनाभावे तामेव योगिनः परमां गतिं विदेहमुक्तमाहुः कथयंतीत्यर्थः ॥७८॥ या पीवरशिलावदवस्थितिः नित्या चलस्वरूपा संशांतसर्वसंकल्पादिनिवृत्तिः ततः देहत्रयाभावाज्जाग्रदाद्यवस्थात्रयनिद्राविनिर्मुक्ता अवस्थात्रयेऽपि तत्त्वाप्रतिबोधलक्षणनिद्रायास्तुल्यत्वात् सेयं सर्वापन्हवसिद्धिब्रह्ममात्रपरास्थितिरवशिष्यते ॥ १० ॥ दृगग्निमनोभिः सह प्राणापानैक्यान्निष्पन्नमरुत्मारुते सुषुम्नानाडीमध्ये संचरति सति तत्रत्यचिदाकाशे मनस्थैर्यं प्रजायते योमनःसुस्थिरीभावः सैवावस्था मनोन्मनीनिर्विकल्पकसमाधिर्भवति ॥ ११ ॥ १२ ॥ यथोक्तलक्षणजीवन्मुक्तस्य मुनेः पुनर्व्युत्थानार्हतया सौमनोनाशः सरूपनाश इत्यभिधीयते समाध्यपगमे पुनर्व्यावृत्तिदर्शनात् लिङ्गादेः लिङ्गशरीरस्य पुनर्व्युत्थानानर्हतया रूपं यथा भवति तथा विरूपनाशस्तुविदेहमुक्तौ विद्यते तद्व्यावृत्तिहेतुकर्मत्रयापन्हवादित्यर्थः ॥ १ ॥ १४ ॥

चित्ते चैत्यवशाद्धीने या स्थितिः क्षीणचेतसाम् ॥ १५ ॥
सोच्यते शांतकल्पना जाग्रत्येव सुषुप्तता ॥ १६ ॥
नैतज्जाग्रन्न च स्वप्नः संकल्पानामभावनात् ॥ १७ ॥
सुषुप्तभावोनाप्येतद्भावाज्जडता स्थितेः ॥ १८ ॥
सत्त्वावबोध एवासौ वासना तृणपावकः ॥ १९ ॥
मोक्षः समाधिशब्देन ननु तूष्णीमवस्थितिः ॥ २० ॥
निर्विकारस्तया धृत्वा ब्रह्माकारतया पुनः ॥ २१ ॥
वृत्तिविस्मरणं सम्यक् समाधिरभिधीयते ॥ २२ ॥
दृश्यासंभवबोधेन रागद्वेषादितानवे ॥ २३ ॥

रतिर्बलोदिता या सा समाधिरभिधीयते ॥२४॥

( टीका ) क्षीणचेतसां योगिनां चित्तेऽन्तःकरणे संकल्पादिचैत्यदशाहीने सति निर्विकल्परूपिणी या स्थितिरवशिष्यते सेयं जाग्रत्येव विषयाग्रहणलक्षणासुषुप्तता सर्वव्यावृत्तिशून्यतः शांतकलनानिर्विकल्पकसमाधिरुच्यते ॥ १५ ॥ १६ ॥ एतन्निर्विकल्पावस्थारूपं जाग्रन्न भवति वाङ्मन आदिचतुर्दश करणव्यावृत्त्यभावात् नचस्वप्नरूपं स्वांतःकरणचतुष्टयगोचरसंकल्पादिवृत्तिनामभावात् एतत्सुषुप्तभावोपि न भवति सुषुप्तिवज्जडतास्थितेरभावात् ॥ १७ ॥ ॥ १८ ॥ असत्प्रपंचापवादाधिकरणं सतोभावः सत्वं तत्सत्वमात्रमित्यवबोधोऽसौ अनंतकोटिजन्महेतुवासनातृणकूटभस्मीकरणाद्दस्त्वलत्पावकोभवति ब्रह्ममात्रप्रबोध एव समाधिशब्देनोक्तः नतचलवत्तूष्णीमवस्थितिः ॥१९॥२०॥जाग्रदाद्यवस्थात्रयविकारविरलया निर्विकाररूपया वृत्या पुनर्निर्विशेषब्रह्माकारतया च युक्तस्य योगिनः सम्यग्ब्रह्माकारवृत्तिविस्मरणमेव समाधिरित्यभिधीयते स्वात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा स्वाज्ञादिदृष्ट्यां दृश्यत इति दृश्यं स्वातिरिक्तप्रपंचजातं इदं प्रपंचं नास्त्येव नोत्पन्नं नोस्थितं पश्यतेहापि सन्मात्रमसदन्यत् ब्रह्ममात्रमसमहीत्यादिदृश्यासंभवप्रबोधेन स्वातिरिक्तदृश्यकल्पनामूलरागद्वेषादिस्तनुतामेति रागाद्यसंभवज्ञाने सति अथ या बलोदिता ब्रह्ममात्ररतिः सा समाधिरित्यभिधीयते ॥२१॥२२॥२३॥२४॥

अहमेव परं ब्रह्म ब्रह्माहमिति संस्थितिः ॥ २५ ॥
समाधिः स तु विज्ञेयः सर्ववृत्तिनिरोधकः ॥२६॥
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥२७॥
ध्यानस्य विस्मृतिः सम्यक् समाधिरभिधीयते॥२८॥
समाहिता नित्यतृप्ता यथा भूतार्थदर्शिनी ॥२९॥

ब्रह्मन् समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥३०॥
अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी ॥३१॥
ब्रह्मन् समाधिशब्देन मेरोः स्थिरतरा स्थितिः॥३२॥
निश्चिता विगताभीष्टा हेयोपादेयवर्जिता ॥३३॥
ब्रह्मन् समाधिशब्देन परिपूर्णमनोगतिः ॥३४॥
सलिले सैन्धवं यद्वत्साम्यं भजति योगतः ॥३५॥
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥३६॥

( टीका ) प्रत्यगहमेव सर्वापवादाधिकरणं परं ब्रह्म तदेव सर्वावभासकप्रत्यगहमिति प्रत्यगभिन्नब्रह्मात्मना संस्थितिरेवतु सर्ववृत्तिनिरोधकः समाधिरितिविज्ञेयम् ॥ २५ ॥ २६ ॥ तत्त्वंपदलक्ष्ययोः परजीवयोरेकतां प्रति ब्रह्ममात्रसंविदुत्पत्तिरेव समाधिरुच्यते ॥ २७ ॥ निर्विशेषं ब्रह्माहमिति सम्यग्ध्यानस्य विस्मृतिरेव समाधिः ॥ २८ ॥ हेब्रह्मन् ब्रह्मातिरिक्तं न किंचिदस्तीति समाहिता निर्विशेषं ब्रह्मस्वमात्रमिति नित्यवृत्ता यथा भूतार्थदर्शिनी परा प्रज्ञा बुधैः समाधिशब्देनोच्यते ॥२९ ॥ ३० ॥ ब्रह्मातिरिक्तं न किंचिदस्तीत्यनुभवबलेन श्वासादिभिः कामादिवृत्तिभिर्वा क्षुब्धविक्षेपरहिता देहद्वयहंभावविरला शीतोष्णादिद्वंद्वेष्वननुपातिनी शीतोष्णादिस्फुर्तिवर्जिता मेरोरपि स्थिरतरा मनःस्थितिः ब्रह्मन् समाधिशब्देनोच्यते ॥ ३१ ॥ ३२ ॥ ब्रह्मैवाहमस्मीति निश्चिता स्वातिरिक्ताऽभ्युदयरहिता अज्ञानं हेयं ज्ञानमुपादेयं तदुभयवर्जिता इत्थं विशेषणविशिष्टा मनोगतिः सर्वपरिपूर्णब्रह्मगोचरा प्रज्ञा ब्रह्मन् समाधिशब्देनोच्यते ॥ ३३ ॥ ३४ ॥ यथा सलिले सैंधवपिण्डं योगतः सर्वं सैंधवत्वेन सलिलत्वेन वा साम्यं भजति तथा जलसैंधवस्थानीयात्ममनसोरैक्यं समाधिरभिधीयते ॥ ३५ ॥३६॥

यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ॥ ३७ ॥
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ ३८ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ॥ ३९ ॥
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ ४० ॥
ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ॥ ४१ ॥
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ ४२ ॥
प्रशांतवृत्तिकं चित्तं परमानंददीपकम् ॥ ४३ ॥
असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ ४४ ॥
स्वानुभूतिरसावेशाद्दृश्यशब्दाद्युपेक्षितुः ॥ ४५ ॥
निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत् ॥ ४६ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् ॥ ४७ ॥
अतद्व्यावृत्तिरूपाऽसौ समाधिर्मुनिभावितः ॥ ४८ ॥

( टीका ) जीवात्मपरमात्मनोः प्रत्यक्परयोस्तयोः सच्चिदानंदत्वेन यत्समवशिष्यते तद्रूपोऽयं नष्टसमस्तसंकल्पजालः निर्विकल्पकसमाधिरभिधीयते ॥ ३७ ॥ ३८ ॥ अहंकारपूर्णार्थस्वल्पाविकासात्मकप्रभामनोबुद्धिविकल्पितजाग्रत्स्वप्नसुषुप्तितत्कार्यसर्वस्वं शून्यमितिज्ञात्वा तच्छून्यापवादास्पदमनामयं निराभासं ब्रह्मास्मीति बोध एव समाधिरित्यभिधीयते ॥ ३९ ॥ ४० ॥ देहादावहंभावं विना ध्यानाभ्यासप्रकर्षजाताखंडैकरसं ब्रह्मास्मीति ब्रह्माकारमनोवृत्तिप्रवाह एवाखंडाकारवृत्त्यात्मकः संप्रज्ञातसमाधिः स्यात् ॥ ४१ ॥ ४२ ॥ प्रशांतस्वातिरिक्तस्फूर्तिवृत्तिकम् चित्तं परमानंददीपकं सद्रूपमात्ररूपेणावशिष्यते योऽयं निर्विकल्पकबोधोयोगिनां प्रियोभवति सोऽयमसंप्रज्ञातनामासमाधिर्भवति॥४३॥ ॥ ४४ ॥ निर्विशेषं ब्रह्मास्मीति स्वानुभूतिरसाभिनिवेशाद् दृश्यानुविद्धशब्दानुविद्धसविकल्पकसमाध्युपेक्षितुः मुनेर्निवातस्थि-

